श्रीसदाशिवेन्द्रसरस्वतीविरचित

# आत्मविद्याविलासः

चिन्मुद्रितकरकमलं चिन्तितभक्तेष्टदं विमलम् ।
गुरुवरमाद्यं कञ्चन निरवधिकानन्दनिर्भरं वन्दे ॥

वटतरुनिकटनिवासं पटुतरविज्ञानमुद्रितकराब्जम् ।
कञ्चन देशिकमाद्यं कैवल्यानन्दकन्दलं वन्दे ॥ १॥

निरवधिसंसृतिनीरधिनिपतितजनतारणस्फुरन्नौकाम् ।
परमतभेदनघुटिकां परमशिवेन्द्रार्यपादुकां नौमि ॥ २॥

देशिकपरमशिवेन्द्रादेशवशोद्बुद्धदिव्यमहिमाऽहम् ।
स्वात्मनि विश्रान्तिकृते सरसं प्रस्तौमि किञ्चिदिदम् ॥ ३॥

निरुपमनित्यनिरीहो निष्कलनिर्मायनिर्गुणाकारः ।
विगलितसर्वविकल्पः शुद्धो बुद्धश्चकास्ति परमात्मा ॥ ४॥

स्वाविद्यैकनिबद्धः कुर्वन्कर्माणि मुह्यमानः सन् ।
दैवाद्विधूतबन्धः स्वात्मज्ञानान्मुनिर्जयति ॥ ५॥

मायावशेन सुप्तो मध्ये पश्यन्सहस्रशः स्वप्नान् ।
देशिकवचःप्रबुद्धो दीव्यत्यानन्दवारिधौ कोऽपि ॥ ६॥

प्राकृतभावमपास्य स्वीकृतनिजरूपसच्चिदानन्दः ।
गुरुवरकरुणापाङ्गाद्गौरवमासाद्य माद्यति प्राज्ञः ॥ ७॥

श्रीगुरुकृपया सच्चित्सुखनिजरूपे निमग्नधीर्मौनी ।
विहरति कश्चन विबुद्धः शान्ताहंतो नितान्तमुदितान्तः ॥ ८॥

गुरुवरकरुणालहरीव्यतिकरभरशीतलस्वान्तः ।
रमते यतिवर एको निरुपमसुखसीमनि स्वैरम् ॥ ९॥

श्रीदेशिकवरकरुणारविकरसमपोहितान्तरध्वान्तः ।
विहरन्मस्करिवर्यो निरवधिकानन्दनीरधावास्ते ॥ १०॥

जनिविपरीतक्रमतो बुद्ध्या प्रविलाप्य पञ्चभूतानि ।
परिशिष्टमात्मतत्त्वं पश्यन्नास्ते मुनिः शान्तः ॥ ११॥

जगदखिलमिदमसारं मायिकमेवेति मनसि मन्वानः ।
पर्यटति पाटिताशः प्रगलितमदमानमत्सरः कोऽपि ॥ १२॥

नात्मनि किञ्चिन्माया तत्कार्यं वाऽस्ति वस्तुतो विमले ।
इति निश्चयवानन्तः हृष्यत्यानन्दनिर्भरो योगी ॥ १३॥

त्वमहमभिमानहीनो मोदितनानाजनाचारः ।
विहरति बालवदेको विमलसुखाम्भोनिधौ मग्नः ॥ १४॥

अवधूतकर्मजालो जडबधिरान्धोपमः कोऽपि ।
आत्मारामो यतिराडटवीकोणेष्वटन्नास्ते ॥ १५॥

शान्त्या दृढोपगूढः शान्तसमस्तान्यवेदनोदारः ।
रमते रसज्ञ एको रम्ये स्वानन्दपर्यङ्के ॥ १६॥

उन्मूलितविषयारिः स्वीकृतवैराग्यसर्वस्वः ।
स्वात्मानन्दमहिम्नि स्वाराज्येऽस्मिन् विराजते यतिराट् ॥ १७॥

सवितर्यपि शीतरुचौ चन्द्रे तीक्ष्णेऽप्यधो वहत्यग्नौ ।
मायिकमिदमिति जानन्जीवन्मुक्तो न विस्मयी भवति ॥ १८॥

अज्ञानवैरिविजयी प्रज्ञामातङ्गमस्तकारूढः ।
विहरति संयमिराजः समरससुखधाम्नि सर्वतो रम्ये ॥ १९॥

शान्ताहंकृतिदोषः सुसमाहितमानसः कोऽपि ।
पूर्णेन्दुशिशिरभावो राजत्यानन्दसत्यचिद्रसिकः ॥ २०॥

तिष्ठन्परत्र धाम्नि स्वीयसुखास्वादपरवशः कश्चित् ।
क्वापि ध्यायति कुहचिद्गायति कुत्रापि नृत्यति स्वैरम् ॥ २१॥

अगृहीताघकलङ्कः प्रशमितसङ्कल्पविभ्रमः प्राज्ञः ।
न्यक्कृतकार्यकलापस्तिष्ठत्यापूर्णसीमनि क्वापि ॥ २२॥

चपलं मनःकुरङ्गं चारु गृहीत्वा विमर्शवागुरया ।
निगमारण्यविहारश्रान्तः शेते स्वधाम्नि कोऽप्येकः ॥ २३॥

दारुणचित्तव्याघ्रं धीरमनःखड्गधारया हत्वा ।
अभयारण्ये कोऽपि स्वैरविहारी जयत्येकः ॥ २४॥

सज्जनहृदयसरोजोन्मीलनकरधीकरप्रसरः ।
एको यतिवरपूषा निर्दोषश्चरति चिद्गगने ॥ २५॥

कुवलयविकासकारणमज्ञानध्वान्तकौमुदीप्रज्ञः ।
शुद्धो मुनीन्द्रचन्द्रः सुरसेव्ये लसति विष्णुपदे ॥ २६॥

स्वानन्दामृतसेकैरान्तरसंतापसंततिं शमयन् ।
चित्रमचञ्चलवृत्तिश्चिद्व्योमनि भाति योगिवर्यघनः ॥ २७॥

सुमनःसौरभमञ्जुलसञ्चारनिवारिताखिलश्रान्तिः ।
संयमिचारुसमीरो विहरत्यानन्दसंविदारामे ॥ २८॥

निःश्रेयससरसफले निर्मलविज्ञानपल्लवमनोज्ञे ।
वीतभये विपिनतले यतिशितिकण्ठो विभाति कोऽप्येकः ॥ २९॥

निःसारभुवनमरुतलमुत्सार्यानन्दसाररसपूर्णे ।
वरसरसि चिन्मयेऽस्मिन्परहंसः कोऽपि दीव्यति स्वैरम् ॥ ३०॥

निखिलागमपल्लविते निगमशिरस्तन्त्रशीतलोद्याने ।
मधुरतरमञ्जुवाचः कूजन्नास्ते यतीन्द्रकलकण्ठः ॥ ३१॥

दारितमोहमदेभो दूरीकृतसकलदुरितशार्दूलः ।
विबुधोत्तमसिंहवरो विहरत्यानन्दविततकान्तारे ॥ ३२॥

अज्ञानमृगवरोज्झितविज्ञानोत्तुङ्गशृङ्गशिखरितले ।
मतिसलिलशीतलाङ्गो यतिमदकलभो विराजते विहरन् ॥ ३३॥

नासाञ्चलनिहिताक्षो नामादिभ्यो निवर्तितस्वान्तः ।
तटिनीतटेषु तत्त्वं ध्यायन्नास्ते यतिः कोऽपि ॥ ३४॥

आशावसनो मौनी नैराश्यालङ्कृतः शान्तः ।
करतलभिक्षापात्रस्तरुतलनिलयो मुनिर्जयति ॥ ३५॥

विजननदीकुञ्जगृहे मञ्जुलपुलिनैकमञ्जुतरतल्पे ।
शेते कोऽपि यतीन्द्रः समरससुखबोधवस्तुनिस्तन्द्रः ॥ ३६॥

भूतलमृदुतरशय्यः शीतलवातैकचामरः शान्तः ।
राकाहिमकरदीपो राजति यतिराजशेखरः कोऽपि ॥ ३७॥

विपुलशिलातलफलके विमलसरिद्वारिपरिवृतोदारे ।
मन्दं मलयजपवने वाति प्रस्वपिति कोऽपि यतिराजः ॥ ३८॥

आन्तरमेकं किञ्चित्सन्ततमनुसन्दधन्महामौनी ।
करपुटभिक्षामश्नन्नटति हि वीथ्यां जडाकृतिः कोऽपि ॥ ३९॥

प्रविलाप्य जगदशेषं परिशिष्टाखण्डवस्तुपरतन्त्रः ।
प्राश्नाति कबलमास्ये प्राप्तं प्रारब्धकर्मणा कोऽपि ॥ ४०॥

निन्दति किमपि न योगी नन्दति नैवापरं किमप्यन्तः ।
चन्दनशीतलहृदयः कन्दलितानन्दमन्थरः स्वास्ते ॥ ४१॥

सन्त्यज्य शास्त्रजालं संव्यवहारं च सर्वतस्त्यक्त्वा ।
आश्रित्य पूर्णपदवीमास्ते निष्कम्पदीपवद्योगी ॥ ४२॥

तृणपङ्कचर्चिताङ्गस्तृणमिव विश्वं विलोकयन्योगी ।
विहरति रहसि वनान्ते विजरामरभूम्नि विश्रान्तः ॥ ४३॥

पश्यति किमपि न रूपं न वदति न शृणोति किञ्चिदपि वचनम् ।
तिष्ठति निरुपमभूमनि निष्ठामवलम्ब्य काष्ठवद्योगी ॥ ४४॥

जात्यभिमानविहीनो जन्तुषु सर्वत्र पूर्णतां पश्यन् ।
गूढं चरति यतीन्द्रो मूढवदखिलागमार्थतत्त्वज्ञः ॥ ४५॥

उपधाय बाहुमूलं परिधायाकाशमवनिमास्तीर्य ।
प्रस्वपिति विरतिवनितां परिरभ्यानन्दपरवशः कोऽपि ॥ ४६॥

गतभेदवासनाभिः स्वप्रज्ञोदारवारनारीभिः ।
रमते सह यतिराजस्त्रय्यन्तान्तःपुरे कोऽपि ॥ ४७॥

वैराग्यविपुलमार्गे विज्ञानोद्दामदीपिकोद्दीप्तम् ।
आरुह्य तत्त्वहर्म्यं मुक्त्या सह मोदते यतिराट् ॥ ४८॥

विजनतलोत्पलमालां वनितावैतृष्ण्यकल्पवल्लीं च ।
अपमानामृतगुटिकामात्मज्ञः कोऽपि गृह्णाति ॥ ४९॥

न निषेधति दोषधिया गुणबुद्ध्या वा न किञ्चिदादत्ते ।
आविद्यकमखिलमिति ज्ञात्वोदास्ते मुनिः कोऽपि ॥ ५०॥

भूतं किमपि न मनुते भावि च किञ्चिन्नचिन्तयत्यन्तः ।
पश्यति न पुरोवर्त्यपि वस्तु समस्तार्थसमरसः कोऽपि ॥ ५१॥

निगृहीताखिलकरणो निर्मृष्टाशेषविषयेहः ।
तृप्तिमनुत्तमसीमां प्राप्तः पर्यटति कोऽपि यतिवर्यः ॥ ५२॥

सन्त्यजति नोपपन्नं नासंपन्नं च वाञ्छति क्वापि ।
स्वस्थः शेते यतिराडान्तरमानन्दमनुभवन्नेकः ॥ ५३॥

कामपि विमलां पदवीमासाद्यानन्दसंविदुन्निद्राम् ।
आस्ते भिक्षुक एको विहरन्निर्मुक्तबन्धनः स्वैरम् ॥ ५४॥

वस्तुन्यस्तमिताखिलविश्वविहारे विलीनमनाः ।
राजति परानपेक्षो राजाऽखिलवीतरागाणाम् ॥ ५५॥

आचार्यापाङ्गदृशा समवाप्तापारसंविदाकारः ।
प्रशमितसकलविभेदः परहंसः कश्चिदाभाति ॥ ५६॥

वर्णाश्रमव्यवस्थामुत्तीर्य विधूय विध्यादीन् ।
परिशिष्यते यतीन्द्रः परिपूर्णानन्दबोधमात्रेण ॥ ५७॥

क्षयमुपनीय समस्तं कर्म प्रारब्धमुपभुज्य ।
प्रविगलितदेहबन्धः प्राज्ञो ब्रह्मैव केवलं भवति ॥ ५८॥

स्तिमितमनन्तमनाद्यं सन्ततमानन्दबोधघनम् ।
अविकल्पमाद्यमेकं सन्मात्रं विद्यते किमपि ॥ ५९॥

अक्षरमजरमजातं सूक्ष्मतरापूर्वशुद्धविज्ञानम् ।
प्रगलितसर्वक्लेशं परतत्त्वं वर्तते किमपि ॥ ६०॥

सुखतरममरमदूरं सारं संसारवारिधेस्तीरम् ।
समरसमभयमपारं तत्किञ्चन विद्यते तत्त्वम् ॥ ६१॥

अरसमगन्धमरूपं विरजस्कमसत्त्वमतमस्कम् ।
निरुपमनिर्भयतत्त्वं तत्किमपि द्योतते नित्यम् ॥ ६२॥

इति गुरुकरुणापाङ्गादार्याभिर्द्व्यधिकषष्टिसङ्ख्याभिः ।
निरवद्याभिरवोचं निगमशिरस्तन्त्रसारभूतार्थम् ॥ ६३॥

गदितमिममात्मविद्याविलासमनुवासरं स्मरन्विबुधः ।
परिणतपरात्मविद्यः प्रपद्यते सपदि परमार्थम् ॥ ६४॥

परमशिवेन्द्रश्रीगुरुशिष्येणेत्थं सदाशिवेन्द्रेण ।
रचितेयमात्मविद्याविलासनाम्नी कृतिः पूर्णा ॥ ६५॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीपरमशिवेन्द्रसरस्वतीपादाब्जसेवापरायणश्रीसदाशिवेन्द्रसरस्वत्या विरचितः आत्मविद्याविलासः समाप्तः॥